**[म] कोट्युत्कटत्वञ्च न स्यात् ।**

[दी] तत्सामग्रीत्वेन हेतुत्वे लाघवात्तत्त्वेनैव हेतुत्वात् । तथा च व्यवसायस्य ज्ञाने तत्प्रामाण्यनिश्चयात्, तेन प्रतिबन्धात्; अज्ञाने च धर्मिज्ञानस्य कारणस्याभावात्; तत्र न प्रामाण्यसंशयसम्भव इति । कोट्युत्कटत्वं-चेत्यन्वाचये चकारः । तथाहि—उत्कटत्वं च यदि जातिस्स्यात्तदा कल्प्येतापि तन्नियामकम् । तत्कोटिसहचरितभूयोधर्मविशिष्टधर्मिज्ञानम् .

[ग] ननु समानादिधर्मवत्ताभासकसामग्रीणां नानात्वेऽपि तद्वत्ताज्ञानोत्पत्तिप्रयोजकतावच्छेदकाविशिष्टत्वेनानुगमय्य तासां कारणत्वं कल्पयित्वा तदवच्छिन्नघटितानुगतसामग्र्यास्संशयोपधानप्रयोजकत्वमुपगन्तव्यमिति शङ्कां निराकरोति (तत्सामग्रीत्वेनैवेति) तत्त्वेनैव—तादृशधर्मवत्ताज्ञानत्वेनैव ।

न च तथा सति धर्मिभासकसामग्रीत्वेनापि हेतुत्वान्तरं वाच्यम्, तदपेक्षया समानादिधर्मवद्धर्मिज्ञानसामग्रीत्वेनैव हेतुत्वकल्पनं युक्तमिति वाच्यम् । निश्चयसाधारणतद्धर्मिकविशिष्टबुद्धौ तद्धर्मिभासकसामग्रीत्वेन हेतुतायाः क्लृप्तत्वात् ।

धर्मिज्ञानस्य संशयहेतुत्वव्यवस्थितौ प्रामाण्यसंशयो नोपपद्यत इति दर्शयति (तथा चेति) तेन—प्रामाण्यनिश्चयेन । तत्र—व्यवसाये । (न प्रामाण्यसंशय इति)—अग्रिमेण सम्बन्धः । कोट्युत्कटत्वनियामकतया धर्मिज्ञानहेतुताया विचारासहत्वात् पूर्वयुक्तावेव निर्भर इत्याह । (अन्वाचय इति) विचारासहत्वमेव दर्शयति (तथाहीति) तन्नियामकं— संशयस्य तद्धर्मिविशेषणतापन्न तत्कोट्यंशे उत्कटत्वनियामकम् । (तत्कोटीति) तत्कोटिसहचरिततत्तविशिष्टैर्भूयोभिर्धर्मैर्विशिष्टस्य धर्मिणो ज्ञानं कारणमित्यर्थः । भूयस्त्वञ्च विपरीतकोटिसहचरितत्वेन गृह्यमाणधर्मापेक्षयाऽधिक्यम् । भूयस्तु

**[दी] भूयस्तत्कोटिसहचरितधर्मविशिष्टधर्मिज्ञानं वा कारणम् । तद्बलाच्च संशयसामान्ये धर्मिज्ञानसामान्यम् । न च तत्तथा चाक्षुषत्वादिना सङ्करात् आंशिकत्वाच्च ; परन्तु तादृशधर्मविशिष्टधर्मिविषयत्वम् , न च तदेव तत्र नियामकमिति ।**

---

[ग] स्थानेषु गृहीततत्सहचारात् , भूयोधर्मदर्शनादपि उत्कटतत्संशयस्य क्वचिदुत्पत्तेः तादृशस्यापि वैकल्पिकहेतुतामाह (भूय इति) उत्कटसंशये तादृशधर्मिज्ञानविशेषहेतुत्वेऽपि प्रकृते धर्मिज्ञानं विनानुत्कटप्रामाण्यसंशयो भविष्यतीति शङ्कानिरासायाह (तद्बलाच्चेति) यद्विशेषयोरित्यादिनियमादिति शेषः । **तत्**—उत्कटत्वम् । **तथा**—जातिः । संशयत्वन्तद्व्याप्यमुत्कटत्वञ्च मानसत्वव्याप्यमेव, तथा च न चाक्षुषत्वादिना सङ्कर इत्यत आह (आंशिकत्वाच्चेति)

मिश्रैस्तु आंशिकत्वस्य जातिबाधकतामनादृत्याव्याप्यवृत्तिस्संशयजातिरित्युक्तम् , तामादृत्य तादृशधर्मविषयकत्वमुपाधिर्वेत्यभिहितम् । दीधितिकारस्तु जातेर्व्याप्यवृत्तितानियमस्य सिद्धान्तसिद्धतया उपाधिनैव व्यवहारासिद्ध्युपपत्तावुत्कटत्वजातेरप्रामाणिकतया चाव्याप्यवृत्तितादृशजातिमवलम्ब्य सिद्धान्तप्रणयनं प्रमात्वजातिं निराकरिष्यतो मूलकृतोऽनुचितमित्याशयेनांशिकतया जातिपक्षन्निराकृत्य उपाधिपक्षं दूषयितुं तादृशोपाधिं निर्वक्ति (परन्त्विति) प्रकृतधर्मिणि यत्र तादृशधर्मो न गृह्यते तत्र स्वातन्त्र्येण धर्म्यन्तरविशेषणतया वा तादृशधर्मभानेऽपि न धर्मिणि उत्कटतत्कोटिसंशयतेति तादृशधर्मप्रकारेण प्रकृतधर्मिविषयतापर्यन्तमुक्तम् । **तदेव**— तादृशधर्मिविषयकत्वमेव । **तत्र**—तादृशधर्मिविषयकत्वावच्छिन्ने । **नियामकम्**—कारणतावच्छेदकम् । जनकत्वेनाभिमते धर्मिज्ञान इव संशयेऽपि तादृशधर्मविशिष्टधर्मिविषयकत्वस्य सामग्र्यन्तरादेव निर्वाहे तत्र तादृशरूपेण कार्यकारणभावे मानाभावादिति भावः ।

**[मू] अथ पीतश्शङ्ख आदर्शे मुखमित्यादिभ्रमो विशेषदर्शनेऽपि यथा दोषान्तरात्, तथा निश्चितेऽपि प्रामाण्ये दोषान्तरात्तत्संशय इति चेत् न तद्वदेवात्रापि प्रवृत्तिप्रसङ्गात् । साक्षात्कारिभ्रमे साक्षात्कारिविशेषदर्शनं विरोधि**

---

[दी] सत्यपि विरोधिन्यानुमानिके पीतत्वाभावनिश्चये यथा दोषवशात्पीतत्वभ्रमः, तथा प्रामाण्यस्य निश्चयेऽपि तस्य संशयस्स्यादित्युक्तं दूषयति (साक्षात्कारीत्यादिना)

---

[ ग ] इदं तु तत्त्वम्, अत्रेदं सम्भावयामीत्यनुगतप्रतीतिसाक्षिकं सम्भावनात्वमव्याप्यवृत्तिजातिर्विषयताविशेषो वा, न तूक्तोपाधिः, तस्य क्वचित् भूयस्तत्कोटिसहचरितधर्मविशिष्टधर्मिविषयकत्वरूपतया क्वचिच्च तत्कोटिसहचरितभूयोधर्मविशिष्टधर्मिविषयकत्वरूपतया भूयस्त्वस्य च यथायोगं द्वित्वत्रित्वचतुष्ट्वादिरूपतयाऽननुगमात्, नियामकञ्च तस्यागत्याननुगतमेवोपेयत इति । मूले (विशेषदर्शनेऽपीति) पीतशङ्खादावपीतत्वादि निश्चये पूर्वं सत्यपीत्यर्थः । (तद्वदत्रापीति) यथा तत्र पीतत्वादिभ्रमे सत्यपि पूर्वोत्पन्नादपीतत्वादिनिश्चयात्तत्प्रकारिकाप्रवृत्तिर्जायते, तथा रजतादिज्ञानेऽनभ्यासदशापन्नेऽपि— प्रामाण्यग्रहस्वीकारे तदुत्तरं कथञ्चिदप्रामाण्य संशयोपपादनेऽपि निश्चितप्रामाण्यकतयानभ्यासदशापन्नज्ञानस्यापि प्रवर्तकता स्यादित्यर्थः । अप्रामाण्यज्ञानानास्कन्दितज्ञानस्य प्रवर्तकत्वे नायं दोषः, अतो दूषणान्तरमाह ( साक्षात्कारीति ) अनेन ग्रन्थेन विशेषदर्शनदशायां पीतत्वादिभ्रमोपपादनं प्रामाण्यसंशयोपपत्तौ सत्यां स्वतः प्रामाण्यग्रहे न दूषणमतो दोषाधीनत्वस्य तदनुपपादकत्वप्रदर्शनाय दोषवशाद्यथा पीतत्वादिभ्रम इति दृष्टान्तदूषणमित्याह—(सत्यपीति) यत्र प्रथमं दोषासत्त्वात् शङ्खो न पीत इति चाक्षुषं दोषसमवधानं च तत्र तादृशदोषवशात्पीतत्वभ्रमो यथेति यदि "अथ पीतश्शङ्ख" इत्यादेरर्थस्तदा तदुपरि साक्षात्का-